देवैराराधितां देवीं सदा सन्तोषकारिणीम् । प्रसाद सुमुखीं देवीं तुष्टिमावाहयाम्यहम् ।1। ॐ भूर्भुवःस्वः तुष्ट्यै नमः । ॐ भूर्भुवःस्वः तुष्टिमावाहयामि स्थापयामि। ॐ भूर्भुवःस्वः भो तुष्टि इहागच्छ इह तिष्ठ। – तदुपरि।

16. ॐ प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा । चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ।1। पत्तने नगरे ग्रामे विपिने पर्वते गृहे । नाना जाति कुलेशानीं दुर्गामावाहयाम्यहम् ।1। ॐ भूर्भुवःस्वः आत्मनः कुलदेवतायै नमः । ॐ भूर्भुवःस्वः आत्मनः कुलदेवतामावाहयामि स्थापयामि । ॐ भूर्भुवःस्वःभो आत्मनः कुलदेवता इहागच्छ इह तिष्ठ ।– तदुपरि। अथवा नाममन्त्रों से आवाहन करें –

1. ॐ भूर्भुवःस्वः गणपतये नमः । ॐ भूर्भुवःस्वः गणपतिमावाहयामि स्थापयामि ।
   ॐ भूर्भुवः स्वः भो गणपते इहागच्छ इह तिष्ठ । और ॐ भूर्भुवःस्वः गौर्य्यै नमः ।
   ॐ भूर्भुवःस्वः गौरीमावाहयामि स्थापयामि । ॐ भूर्भुवः स्वः भो गौरि इहागच्छ इह तिष्ठ । – नैर्ऋत्ये।
2. ॐ भूर्भुवःस्वः पद्मायै नमः । ॐ भूर्भुवः स्वः पद्मामावाहयामि स्थापयामि ।
   ॐ भूर्भुवः स्वः भो पद्मे इहागच्छ इह तिष्ठ । – तदुपरि दक्षिणे।
3. ॐ भूर्भुवः स्वः शच्यैनमः । ॐ भूर्भुवःस्वः शचींमावाहयामि स्थापयामि पूजयामि ।
   ॐ भूर्भुवःस्वः भो शचि इहागच्छ इह तिष्ठ। – तदुपरि दक्षिणे।
4. ॐ भूर्भुवःस्वः मेधायैनमः । ॐ भूर्भुवःस्वः मेधामावाहयामि स्थापयामि ।
   ॐ भूर्भुवःस्वः भो मेधा इहागच्छ इह तिष्ठ । –तदुपरि आग्नेये।

5. ॐ भूर्भुवःस्वः सावित्र्यै नमः । ॐ भूर्भुवःस्वः सावित्रींमावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो सावित्री इहागच्छ इह तिष्ठ। - पुनरधः गणेशस्य वामे।

6. ॐ भूर्भुवःस्वः विजयायै नमः ।ॐ भूर्भुवःस्वः विजयामावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो विजया इहागच्छ इह तिष्ठ । - तदुपरि।

7. ॐ भूर्भुवःस्वः जयायै नमः । ॐ भूर्भुवःस्वः जयांमावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो जया इहागच्छ इह तिष्ठ । - तदुपरि।

8. ॐ भूर्भुवःस्वः देवसेनायै नमः । ॐ भूर्भुवःस्वः देवसेनामावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो देवसेना इहागच्छ इह तिष्ठ । - तदुपरि।

9. ॐ भूर्भुवःस्वः स्वधायै नमः । ॐ भूर्भुवःस्वः स्वधामावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो स्वधा इहागच्छ इह तिष्ठ । - पुनरधः सावित्र्याः वामे।

10. ॐ भूर्भुवःस्वः स्वाहायै नमः । ॐ भूर्भुवःस्वः स्वाहामावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो स्वाहा इहागच्छ इह तिष्ठ । - तदुपरि।

11. ॐ भूर्भुवःस्वः मातृभ्यो नमः । ॐ भूर्भुवःस्वः मातरमावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो मातर इहागच्छ इह तिष्ठ ।। - तदुपरि।

12. **ॐ भूर्भुवःस्वः लोकमातृभ्यो नमः । ॐ भूर्भुवःस्वः लोकमातरमावाहयामि स्थापयामि ।**
**ॐ भूर्भुवःस्वः भो लोकमातरः इहागच्छ इह तिष्ठ ।** – तदुपरि।

13. **ॐ भूर्भुवःस्वः धृत्यै नमः । ॐ भूर्भुवःस्वः धृतींमावाहयामि स्थापयामि ।**
**ॐ भूर्भुवःस्वः भो धृती इहागच्छ इह तिष्ठ ।** पुनरधः स्वधया वामे।

14. **ॐ भूर्भुवःस्वः पुष्ट्यै नम । ॐ भूर्भुवःस्वः पुष्टींमावाहयामि स्थापयामि ।**
**ॐ भूर्भुवःस्वः भो पुष्टी इहागच्छ इह तिष्ठ।**– तदुपरि।

15. **ॐ भूर्भुवःस्वः तुष्ट्यै नमः । ॐ भूर्भुवःस्वः तुष्टींमावाहयामि स्थापयामि।**
**ॐ भूर्भुवःस्वः भो तुष्टी इहागच्छ इह तिष्ठ।** – तदुपरि।

16. **ॐ भूर्भुवःस्वः आत्मनः कुलदेवतायै नमः । ॐ भूर्भुवःस्वः आत्मनः कुलदेवतामावाहयामि स्थापयामि ।**
**ॐ भूर्भुवःस्वः भो आत्मनः कुलदेवता इहागच्छ इह तिष्ठ ।** – तदुपरि।
**ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनो त्वरिष्टं यज्ञ९समिमं दधातु । विश्वेदेवा स इह मादयन्तामों3 प्रतिष्ठ ।1।**
**ॐ अस्यै प्राणा प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन ।1।**
**श्री गणेशपूर्वकगौर्यादिषोडशमातृकाः सुप्रतिष्ठिताः वरदाः भवन्तु ।।**

पंचोपचार अथवा दशोपचार अथवा षोडशोपचारों से पूजन करें–

'**ॐ भूर्भुवःस्वः षोडशमातृकादेवताभ्यो नमः सर्वोपचारार्थे गन्धादीन्समर्पयामि।**' इति सम्पूज्य प्रार्थयेत् -
'**ब्रह्माणी कमलेन्दु सौम्य वदना माहेश्वरी लीलया। कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी।**

वाराही घनघोर घुर्घुरमुरवी चैंद्री च वज्रायुधा। चामुण्डा गणनाथ रुद्र सहिताःरक्षन्तु भोः मातरः।1।
ॐ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः।।
हृष्टि पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका ह्यैता वृद्धौ पूज्यास्तु षोडशः।2।
आयुरारोग्यमैश्वर्यं ददध्वं मातरो मम । निर्विघ्नं सर्वकार्येषु कुरुध्वं सगणाधिपाः ।3।
अनया पूजया षोडशमातृकादेवता साङ्गा सपरिवारा सायुधा सशक्तिका सवाहना प्रीयन्ताम् न मम ।।'

**5.25 सप्तघृतमातृकापूजनम् -** तत्र प्रमाणं -

'तत्पुरः सन्निधाने वा कुड्ये रेखा घृतेन च । धारालिंगेन मन्त्रेण पञ्च वा सप्त वा लिखेत् ।1।
गृहनिर्गमवामे च वसोर्द्धारा वितर्दिका । कार्या विवाहे विद्वद्भिः गृहे व पूर्व-दक्षिणे ।2।'

स्थलप्रमाणम् - **गृहे वै पश्चिमद्वारे तथा उत्तर एव च । सप्तघृतमातृवेदि गृहनिर्गमदक्षिणे ।।'**

विधिः - **'कुड्ये आवाहित मातृणामुपरि सिन्दूराक्तेन घृतेन भित्तौ धारां दद्यात् ।
नागवल्लीदले सकुंकुमं ससिन्दूरं वा तप्तं घृतं गृहीत्वा तेन प्राक्संस्था उदक्संस्था वा प्रदेशमात्रीः धाराः कुर्यात् । तासां शिरांसि च मिथो मेलनीयानि । एकीकृत्योद्ध्र्वभागे तु कुंकुमेन गुडादिना इति ।।** अर्थात् अग्निकोण में दीवाल या पट्टे पर कुंकुम (रोली) से क्रमशः ऊपर से नीचे तक एक, दो, तीन, चार, पांच, छः एवं सात बिंदुओं को लिखकर उन पर पूजा करे।

**ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्त्रधारम् ।
देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ।।**

इस मन्त्र के सुप्वा तक का पाठ पढ़कर घृतधारा करके कामधुक्ष: ऐसा पढ़कर गुड़ से उनको मिला देवे । वहां देवताओं का आवाहन करे

**1. ॐ मनसः काममाकूतिं वाचः सत्यमशीय । पशूनां रुपमन्नस्य रसो यशः श्री श्रयतां मयि स्वाहा ।।**

**ॐ भूर्भुवःस्वः श्रियै नमः। ॐ भूर्भुवःस्वः श्रियमावाहयामि स्थापयामि। ॐ भूर्भुवःस्वःभो श्री इहागच्छ इह तिष्ठ ।**

**2. ॐ श्रीश्चते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रुपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्म इषाण सर्वलोकम्म इषाण ।।**

**ॐ भूर्भुवःस्वः लक्ष्म्यै नमः। ॐ भूर्भुवःस्वः लक्ष्मीमावाहयामि स्थापयामि। ॐ भूर्भुवःस्वःभो लक्ष्मी इहागच्छ इह तिष्ठ ।**

**3. ॐ भद्रङ्कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ।**

**ॐ भूर्भुवःस्वः धृत्यै नमः । ॐ भूर्भुवःस्वः धृतिमावाहयामि स्थापयामि । ॐ भूर्भुवःस्वःभो धृति इहागच्छ इह तिष्ठ ।**

**4. ॐ मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः । मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ।।**

**ॐ भूर्भुवःस्वः मेधायै नमः । ॐ भूर्भुवःस्वः मेधामावाहयामि स्थापयामि । ॐ भूर्भुवःस्वःभो मेधा इहागच्छ इह तिष्ठ।**

**5. ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा । श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ।**

**ॐ भूर्भुवःस्वः स्वाहायै नमः। ॐ भूर्भुवःस्वः स्वाहामावाहयामि स्थापयामि । ॐ भूर्भुवःस्वःभो स्वाहा इहागच्छ इह तिष्ठ ।**

**6. ॐ आयङ्गौः पृश्निरवक्रमीदसन्मातरं पुरः । पितरञ्च प्रयन्त्स्वः ।। ॐ भूर्भुवःस्वः प्रज्ञायै नमः।**

**ॐ भूर्भुवःस्वः प्रज्ञामावाहयामि स्थापयामि । ॐ भूर्भुवःस्वः भो प्रज्ञा इहागच्छ इह तिष्ठ।**

**7. ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती यज्ञं वष्टु धिया वसुः।। ॐ भूर्भुवःस्वः सरस्वत्यै नमः।**

**ॐ भूर्भुवःस्वः सरस्वतीमावाहयामि स्थापयामि । ॐ भूर्भुवःस्वःभो सरस्वती इहागच्छ इह तिष्ठ।**

अथवा नाममन्त्रों से आवाहनादि करें –

1. ॐ भूर्भुवःस्वः श्रियै नमः। ॐ भूर्भुवःस्वः श्रियमावाहयामि स्थापयामि।

ॐ भूर्भुवःस्वःभो श्री इहागच्छ इह तिष्ठ।

2. ॐ भूर्भुवःस्वः लक्ष्म्यै नमः। ॐ भूर्भुवःस्वः लक्ष्मीमावाहयामि स्थापयामि पूजयामि।

ॐ भूर्भुवःस्वःभो लक्ष्मी इहागच्छ इह तिष्ठ।

3. ॐ भूर्भुवःस्वः धृत्यै नमः। ॐ भूर्भुवःस्वः धृतिमावाहयामि स्थापयामि।

ॐ भूर्भुवःस्वःभो धृती इहागच्छ इह तिष्ठ।

4. ॐ भूर्भुवःस्वः मेधायै नमः। ॐ भूर्भुवःस्वः मेधामावाहयामि स्थापयामि।

ॐ भूर्भुवःस्वःभो मेधा इहागच्छ इह तिष्ठ।

5. ॐ भूर्भुवःस्वःस्वाहायै नमः। ॐ भूर्भुवःस्वः स्वाहामावाहयामि स्थापयामि।

ॐ भूर्भुवःस्वःभो स्वाहा इहागच्छ इह तिष्ठ।

6. ॐ भूर्भुवःस्वः प्रज्ञायै नमः। ॐ भूर्भुवःस्वः प्रज्ञामावाहयामि स्थापयामि।

ॐ भूर्भुवःस्वः भो प्रज्ञा इहागच्छ इह तिष्ठ।

7. ॐ भूर्भुवःस्वः सरस्वत्यै नमः। ॐ भूर्भुवःस्वःसरस्वतीमावाहयामि स्थापयामि।

ॐ भूर्भुवःस्वःभो सरस्वती इहागच्छ इह तिष्ठ॥

ॐ श्रीः लक्ष्मीः धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती। माङ्गल्येषु प्रपूज्यन्ते सप्तैताः घृतमातरः॥

सप्तघृतमातृकादेवताभ्यो नमः। इत्यावाह्य प्रतिष्ठापयेत्।

ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनो त्वरिष्टं यज्ञꣳसमिमं दधातु । विश्वेदेवा स इह मादयन्ता मो 3 प्रतिष्ठ।
सप्तघृतमातृकादेवता सुप्रतिष्ठिताः वरदाः भवन्तु । पंचोपचार अथवा दशोपचार अथवा षोडशोपचारों से पूजन करें -
'ॐ भूर्भुवःस्वः सप्तघृतमातृकादेवताभ्यो नमः सर्वोपचारार्थे गन्धादीन्समर्पयामि।' सम्पूज्य प्रार्थयेत् -
यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः। कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ।।
अनया पूजया सप्तघृतमातृकादेवता साङ्गा सपरिवारा सायुधा सशक्तिका सवाहना प्रीयन्ताम् न मम ।।

## 5.26 सप्तस्थलमातृका पूजनम्

तण्डुलपुञ्जेषु पूगीफलेषु वा ब्राह्मी आदि सप्तस्थलमातृका -

1. 'ॐ साऽब्रवीदहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मक जगच्छून्यं चाशून्यं च।। ॐ भूर्भुवस्वः ब्राह्म्यै नमः। ब्राह्मीमावाहयामि स्थापयामि। भो ब्राह्मि इह आगच्छ इह तिष्ठ।।'
2. 'ॐ अहं रुद्रेभिर्वसुभिश्चराम्यादित्यैरुत विश्वदेवैः। अहं मित्रावरुणावुभा बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ।। ॐ भूर्भुवस्वः माहेश्वर्यै नमः। माहेश्वरीमावाहयामि स्थापयामि। भो माहेश्वरि इह आगच्छ इह तिष्ठ।।'
3. 'ॐ हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम्। पाशांकुशधरां सौम्यां वरदाभयहस्तकाम्। त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे।। ॐ भूर्भुवस्वः कौमार्यै नमः। कौमारीमावाहयामि स्थापयामि। भो कौमारि इह आगच्छ इह तिष्ठ।।'
4. 'ॐ कालरात्रिं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम्। सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम्।। ॐ भूर्भुवस्वः वैष्णव्यै नमः। वैष्णवीमावाहयामि स्थापयामि। भो वैष्णवि इह आगच्छ इह तिष्ठ।।'

5. ‘ॐ सत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्च मे विश्वञ्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे सुकृत ञ्च मे यज्ञेन कल्पन्ताम्।। ॐ भूर्भुवस्वः वाराह्यै नमः। वाराहीमावाहयामि स्थापयामि। भो वाराहि इह आगच्छ इह तिष्ठ।।’

6. ‘ॐ सैषा सत्त्वरजस्तमांसि। सैषा प्रजापतीन्द्रमनवः। सैषा ग्रहनक्षत्रज्योतींषि कालकाष्ठाऽऽदिकालरूपिणी। तामहं प्रणौमि नित्यम्।। ॐ भूर्भुवस्वः इन्द्राण्यै नमः। इन्द्राणीमावाहयामि स्थापयामि। भो इन्द्राणि इह आगच्छ इह तिष्ठ।।’

7. ‘ॐ योऽहमस्मीति वा सोऽहमस्मीति वा योऽसौ सोऽहमस्मीति वा या भाव्यते सैषा षोडशी श्रीविद्या पंचदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाऽम्बिकेति बगलेति वा मातंगीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातंगीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यंगिरा धूमावती सावित्री सरस्वती गायत्री ब्रह्मानन्दकलेति।। ॐ भूर्भुवस्वः चामुण्डायै नमः। चामुण्डामावाहयामि स्थापयामि। भो चामुण्डे इह आगच्छ इह तिष्ठ।।’

अथवा नाममन्त्रों से भी आवाहनादि कर सकते हैं –

1. ॐ भूर्भुवःस्वः ब्राह्यै नमः। ॐ भूर्भुवःस्वः ब्राह्मीमावाहयामि स्थापयामि। ॐ भूर्भुवःस्वः भो ब्राह्मी इहागच्छ इहा तिष्ठ।
2. ॐ भूर्भुवःस्वः माहेश्वर्य्यै नमः । ॐ भूर्भुवःस्वः माहेश्वरीमावाहयामि स्थापयामि।
   ॐ भूर्भुवःस्वः भो माहेश्वरी इहागच्छ इहा तिष्ठ ।
3. ॐ भूर्भुवःस्वः कौमार्य्यै नमः । ॐ भूर्भुवःस्वः कौमारीमावाहयामि स्थापयामि ।
   ॐ भूर्भुवःस्वः भो कौमारी इहागच्छ इहा तिष्ठ ।

4. ॐ भूर्भुवःस्वः वैष्णव्यै नमः । ॐ भूर्भुवःस्वः वैष्णवीमावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो वैष्णवी इहागच्छ इह तिष्ठ ।

5. ॐ भूर्भुवःस्वः वाराह्यै नमः। ॐ भूर्भुवःस्वः वाराहीमावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो वाराही इहागच्छ इहा तिष्ठ । ॐ

6. ॐ भूर्भुवःस्वः इन्द्राण्यै नमः । ॐ भूर्भुवःस्वः इन्द्राणीमावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो इन्द्राणी इहागच्छ इह तिष्ठ ।

7. ॐ भूर्भुवःस्वः चामुण्डायै नमः । ॐ भूर्भुवःस्वः चामुण्डामावाहयामि स्थापयामि ।
ॐ भूर्भुवःस्वः भो चामुण्डा इहागच्छ इहा तिष्ठ । इत्यावाह्य

ॐ मनोजूतिर्जुषता माज्यस्य बृहस्पतिर्यज्ञमिमं तनो त्वरिष्टं यज्ञᳫसमिमं दधातु । विश्वेदेवा स इह मादयन्ता मो 3 प्रतिष्ठ ।। ॐ अस्यै प्राणा प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन ।। ब्राह्‌यादि सप्तमातृकाभ्यो नमः। पंचोपचार अथवा दशोपचार अथवा षोडशोपचारों से पूजन करें -

'ॐ भूर्भुवःस्वः स्थलमातृकादेवताभ्यो नमः सर्वोपचारार्थे गन्धादीन्समर्पयामि।'

अनया पूजया स्थलमातृकादेवता साङ्गा सपरिवारा सायुधा सशक्तिका सवाहना प्रीयन्ताम् न मम ।।

## 5.27 ॐकारपूजनं श्रीपूजनं च -

'ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः। कामदं मोक्षदं चैव ॐकाराय नमो नमः।।'

निम्न मन्त्र से पंचोपचार अथवा दशोपचार अथवा षोडशोपचारों से पूजन करें – **'ॐ भूर्भुवःस्वः ॐकारय नमः।'**

**'ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्म ऽइषाण।।'** निम्न मन्त्र से पंचोपचार अथवा दशोपचार अथवा षोडशोपचारों से पूजन करें – **'ॐ भूर्भुवःस्वः श्रियै नमः।'**

**5.28 त्रिदेवपूजनं।**

परमपितामह ब्रह्माजी का ध्यान करे –

**'ॐ सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये।**
**सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपद्ये।।**

**ॐ भूर्भुवस्वः ब्रह्मणे नमः। ब्रह्माणमावाहयामि स्थापयामि। भो ब्रह्म इह आगच्छ इह तिष्ठ।।'**

भगवान् विष्णु का ध्यान करे –

**'शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं, विश्वाधारं गगनसदृशं मेघवर्णं शुभांगम्।**
**लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं, वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्।।**
**ॐ भूर्भुवःस्वः विष्णवे नमः। ॐ भूर्भुवःस्वः विष्णुमावाहयामि स्थापयामि।**
**ॐ भूर्भुवःस्वः भो विष्णु इहागच्छेह तिष्ठ।'**

भगवान् शंकर का ध्यान करे –

'वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं। वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिं।।
वन्दे सूर्यशशांकवह्निनयनं वन्दे मुकुन्दप्रियं। वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शंकरम्।।
ॐ भूर्भुवःस्वः शिवाय नमः। ॐ भूर्भुवःस्वः शिवमावाहयामि स्थापयामि।
ॐ भूर्भुवःस्वः भो शिव इहागच्छेह तिष्ठ।'

**5.29 अथ सांकल्पिकनान्दीमुखश्राद्धम्** (आभ्युदयिक श्राद्धम्) – **तत्र प्रमाणम्** –

**कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः। शुभकर्मणि बालानां चूडाकर्मादिके तथा ।।**
**सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नान्दीमुखान् पितृनादौ तर्पयेत्प्रयतो गृही ।।**

विधिः – **'आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे, पित्र्यमन्त्रवर्जं जपः, ऋजवो दर्भाः, यवैस्तिलार्थाः, संपन्नमिति इतरे ब्रूयुः । नान्दीमुखान् पितृन् आवाहयिष्ये इति पृच्छति आवाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामिति, अक्षय्यस्थाने नान्दी मुखान् पितृन् वाचयिष्ये इति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहाः, मातामहाः प्रमातामहाः वृद्धप्रमातामहाश्च प्रीयन्ताम् इति, न स्वधां प्रयुञ्जीत् । कर्तव्यं चाभ्युदयिकं श्राद्धमभ्युदयार्थिना । सव्येन चोपवीतेन ऋजु दर्भैश्च धीमता । (हेमाद्रौ) अत्र सत्यवसुसंज्ञकाः विश्वेदेवाः । षड्दैवतं श्राद्धम् । पूर्वाह्ने इत्यनेन अपराह्नकालस्य निषेधः । उदीरितामवर इत्यादि पितृमन्त्राणां जपस्य निषेधः । तिलोऽसीति पदस्थाने यवोऽसि इत्यूहः कार्यः। स्वधया इति पद स्थाने पुष्टि शब्दं वदेत् ।'**

अर्थात् उत्सव, आनन्द, यज्ञ, पुत्र/पुत्री विवाह, गृह प्रवेश, शुभ कर्म, सीमन्तोन्नयन, चूडादि कर्म, मूर्ति प्रतिष्ठा आदि कार्यों में शास्त्रोक्त विधान से नान्दीमुख श्राद्ध करना चाहिए । प्रातः काल प्रातः कृत्य, स्नानादि से निवृत्त होकर विशुद्ध भूमि में आकर शुद्ध आसन पर बैठकर

स्वस्तिवाचन एवं गणपति पूजन करने के पश्चात् पुण्याहवाचन से पूर्व देवविधि के अनुसार आभ्युदयिक श्राद्ध को करे । अभ्युदय (वृद्धि) प्राप्ति के लिए जो कार्य किया जाता है उसे आभ्युदयिक श्राद्ध कहते हैं, इसे ही नान्दीमुख श्राद्ध कहा जाता है। इसमें नामभेद की बात नहीं है । यह श्राद्ध प्रातः काल में ही करना चाहिए । अपराह्नकाल का निषेध है । इस श्राद्ध में तिलों के स्थान पर यव का प्रयोग होता है । मन्त्रों के अतिरिक्त स्वाहा या स्वधा शब्द का प्रयोग नहीं होता है । इसमें यजमान पूर्वाभिमुख बैठकर ही समस्त कार्य करता है। इसमें कुशा भी सीधे ढंग से प्रयोग में लाई जाती है । इत्यादि.... । आसन पर बैठकर

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ।।**

**पुण्डरीकाक्षः पुनातु। पुण्डरीकाक्षः पुनातु। पुण्डरीकाक्षः पुनातु।**

जल से प्रोक्षण कर आचमन करके स्वस्ति वाचन करे ।

**ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ।।**

**ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे । पयोधाः पयःस्वती प्रदिशः सन्तु मह्यम् ।**

**ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि । विष्णोः ध्रुवोसि वैष्णवमसि विष्णवे त्वा ।**

**ॐ अग्निर्देवता वातो देवता सूर्यदेवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवता देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ।**

**ॐ द्यौः शान्तिरन्तरिक्ष ঌ शान्तिः पृथिवी शान्तिरापः शान्तिरौषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्ति र्ब्रह्म शान्तिः सर्व ঌशान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि सुशान्तिर्भवति ।**

**ॐ विश्वेदेवा सः इह मादयन्ता मो प्रतिष्ठ एष वै प्रतिष्ठ नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति ।**

ॐ विश्वानि देव सवित दुर्रितानि परासुव यद्भद्रं तन्न आसुव ।
ॐ एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव ।

।।अथायुष्य मन्त्रः।।

यदायुष्यं चिरं देवाः सप्तकल्पान्तजीविषु। ददुस्तेनायुषा युक्ता जीवेम शरदः शतम्।।
दीर्घा नागा नगा नद्योऽनन्ताः सप्तार्णवा दिशः। अनन्तेनायुशा तेन जीवेम शरदः शतम्।।
सत्यानि पंचभूतानि विनाशरहितानि च। अविनाश्यायुशा तद्वज्जीवेम शरदः शतम्।।

ॐ आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदꣳहिरण्यं वर्चस्वज्जैत्राया विशतादुमाम् ।। 1
ॐ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳह्येतत् । यो विभर्ति दाक्षायणꣳहिरण्यं स देवेषु कृणुते दीर्घमायुः। स मनुष्येषु कृणुते दीर्घमायुः।।2।।
ॐ यदावध्नन्दाक्षायणा हिरण्यꣳशतानीकाय सुमनस्यमानाः। तन्म आबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ।। 3 ।।
ॐ यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथाऽन्ये । विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ।। 4 ।।

अभीप्सितार्थ सिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ।। इति गणेशं नमस्कृत्य,
शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।। इति विष्णुं च प्रणम्य,
सत्यानुष्ठानसम्पन्नाः सर्वदा यज्ञबुद्धयः । पितृमातृपराश्चैव सन्त्वस्मत् कुलजाः नराः ।। इति कुलपुरुषान्प्रणम्य,

विशेषपूजनम् -

**आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं नृणाम्प्रीताः पितामहाः ।।**

**आयुः पुत्रान् यशः स्वर्गं कीर्त्तिं पुष्टिं बलं श्रियम् । पशून् सुखं धनं धान्यं प्राप्नुया पितृपूजनात् ।।**

**देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ।।**

वस्त्र, यज्ञोपवीत, चन्दन, अक्षत, पुष्प, धूप, दीप, नैवेद्य, पूगीफल, ताम्बूल और दक्षिणा रखकर आचमन और प्राणायाम करके संकल्प करें - **'ॐ विष्णुर्विष्णुर्विष्णुः पूर्वोक्त एवं गुणविशेषणविशिष्टायां शुभतिथौ देवब्राह्मणानां च सन्निधौ अद्य दुर्गापूजनांगत्वेन सांकल्पिकविधिना ब्राह्मणयुग्मभोजनपर्याप्तमन्ननिष्क्रयीभूतं यथाशक्तिहिरण्येन नान्दीश्राद्धं करिष्ये'।**

**पाद्यादि** दान करे -

**'सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ।1।**
**अमुकगोत्रा मातृपितामहीप्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ।2।**
**अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखा ॐ भूर्भुवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ।3।**
(द्वितीयगोत्राः -) **मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवःस्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः'।4।**

**आसन** दान करें -

**'सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम् ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः।1।**

अमुकगोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनां ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम् ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः।2।

अमुकगोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानां ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम् ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः।3।

(द्वितीयगोत्राणां –)

मातामहप्रमातामहवृद्धप्रमातामहनां सपत्नीकानां नान्दीमुखानां ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम् ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः'।4।

गन्धादि दान करें –

'सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः।1।
अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः।2।
अमुकगोत्रेभ्यो पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः।3।
(द्वितीयगोत्रेभ्यो –)
मातामहप्रमातामहवृद्धप्रमातामहेभ्यो सपत्नीकेभ्यो नान्दीमुखेभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः'।4।

भोजननिष्क्रयद्रव्य दान करें –

'सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः इदं ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं

दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ।1।

अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः इदं ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ।2।

अमुकगोत्रेभ्यो पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः इदं ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ।3।

(द्वितीयगोत्रेभ्यो –)

मातामहप्रमातामहवृद्धप्रमातामहेभ्यो सपत्नीकेभ्यो नान्दीमुखेभ्यः इदं ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः'।4।

सक्षीर जल दान करें –

'सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवःस्वः इदं वः सक्षीरोदकं प्रीयन्ताम्।1।
अमुकगोत्रा मातृपितामहीप्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवःस्वः इदं वः सक्षीरोदकं प्रीयन्ताम्।2।
अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखा ॐ भूर्भुवःस्वः इदं वः सक्षीरोदकं प्रीयन्ताम्।3।

(द्वितीयगोत्राः –)

मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवःस्वः इदं वः सक्षीरोदकं प्रीयन्ताम्'।4।

<u>जलाक्षतपुष्प</u> दान करें – '**चतुर्थस्थानेषु शिवा आपः सन्तु** – इति जलम्। **अक्षतं चारिष्टमस्तु** – इत्यक्षतान्।
**सौमनस्यमस्तु** – इति पुष्पम्। '**ॐ अघोराः पितरः सन्तु** – इति पूर्वाग्रां जलधारां दद्यात्।

<u>आशीर्वाद</u> ग्रहण करें –

यजमान कहे – '**गोत्रं नो वर्धताम्**', द्विज कहे – '**वर्धताम् वो गोत्रम्**'।
यजमान कहे (सिर ढ़ककर) – '**दातारो नोऽअभिवर्धताम्**', द्विज कहे – '**अभिवर्धताम् वो दातारः**'।
यजमान कहे – '**वेदाश्च नोऽअभिवर्धन्ताम्**', द्विज कहे – '**अभिवर्धन्ताम् वो वेदाः**'।
यजमान कहे – '**संततिर्नो वर्धताम्**', द्विज कहे – '**वर्धताम् वः सन्ततिः**'।
यजमान कहे – '**श्रद्धा च नो मा व्यगमत्**', द्विज कहे – '**मा व्यगमत् वः श्रद्धा**'।
यजमान कहे – '**बहु देयं च नोऽअस्तु**', द्विज कहे – '**अस्तु वो देयम्**'।
यजमान कहे – '**अन्नं च नो बहु भवेत्**', द्विज कहे – '**भवतु वो बह्वन्नम्**'।
यजमान कहे – '**अतिथींश्च लभामहे**', द्विज कहे – '**लभन्ताम् वोऽअतिथयः**'।
यजमान कहे – '**याचितारश्च नः सन्तु**', द्विज कहे – '**सन्तु वो याचितारः**'।
यजमान कहे – '**एषा आशिषः सत्याः सन्तु**', द्विज कहे – '**सन्त्वेताः सत्याशिषः**'।

<u>दक्षिणा</u> दान दें –

'**सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयव मूलादिभिर्निष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः ।1।**

**अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयव मूलादिभिर्निष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः।2।**

**अमुकगोत्रेभ्यो पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयव मूलादिभिर्निष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः।3।** (द्वितीयगोत्रेभ्यो -)

**मातामहप्रमातामहवृद्धप्रमातामहेभ्यो सपत्नीकेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयव मूलादिभिर्निष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः'।4।**

**'नान्दीश्राद्धं संपन्नं सुसंपन्नमस्तु'** - यह कह कर अगले मन्त्र से विसर्जन करें -

**'ॐ वाजे वाजेवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबतमादयध्वं तृप्तायात पथिभिर्देवयानैः'।1।**

इस मन्त्र से अनुव्रजन करें -

**'आमा वाजस्य प्रसवोजगम्यादेमे द्यावापृथिवी विश्वरूपे। आमागन्तां पितरा मातरा चामा सोमोऽअमृतत्वेन गम्यात्'।2।**

यजमान कहे - **'अस्मिन्नान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् नान्दीमुखप्रसादाच्च सर्वः परिपूर्णोऽअस्तु'**, द्विज तीन बार कहे - **'अस्तु परिपूर्णः, अस्तु परिपूर्णः, अस्तु परिपूर्णः'।**

**5.30-1 अथ आचार्यवरणं :-** (यह केवल यज्ञ के दिन करें)

हाथ में गन्धाक्षतपुष्पताम्बूलमुद्रा और वस्त्र लिये हुये सर्व प्रथम आचार्यत्व हेतु एक ब्राह्मण से निवेदन करें -

**'अस्मिन्दुर्गापूजनादिहोमपर्यन्तकर्मकर्तुं......गोत्रवन्तं.....शर्माणं ब्राह्मणं एभिर्गन्धाक्षतपुष्पताम्बूलमुद्रावासोभिः आचार्यत्वेन त्वामहं वृणे।'** आचार्य कहें -

**'ॐ वृतोऽस्मि। ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते'।**

उनके हाथों में गन्धादि देकर पुनः प्रार्थना करें -

**'ॐ बृहस्पते इत्यस्य मन्त्रस्य गृत्समद ऋषिः, त्रिष्टुप्छन्दः, बृहस्पतिर्देवता आचार्यवरणे विनियोगः।**

**ॐ बृहस्पतेऽअतियदर्योऽर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजाततदस्मासु द्रविणं देहि चित्रम्।।**

**आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः। तथा त्वं मम यज्ञेऽअस्मिन् आचार्यो भव सुव्रत।।'**

चन्दनाक्षतपुष्पादि से आचार्यजी की पूजा करें। अब यज्ञ केलिये ब्रह्मा का वरण करें।

**5.30-2 अथ ब्रह्मा वरणं :-**

हाथ में पुनः गन्धाक्षतपुष्पताम्बूलमुद्रा और वस्त्र लिये हुये ब्रह्मा पद केलिये एक ब्राह्मण से निवेदन करें -

**'अस्मिन्दुर्गानूजनादिहोमपर्यन्तकर्मकर्तुं....गोत्रवन्तं....शर्माणं ब्राह्मणं एभिर्गन्धाक्षतपुष्पताम्बूलमुद्रावासोभिः ब्रह्मत्वेन त्वामहं वृणे।'** ब्रह्मा कहें -

**'ॐ वृतोऽस्मि। ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते'।**

उनके हाथों में गन्धादि देकर पुनः प्रार्थना करें -

**'ॐ ब्रह्मणा ते इत्यस्य मन्त्रस्य विश्वामित्रो ऋषिः, त्रिष्टुप्छन्दः, ब्रह्मा देवता, ब्रह्मवरणे विनियोगः।**

**ॐ ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखिया सधमाद आशु। स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन् विद्वानुपयाहि - सोमम्।। यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः। तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा द्विजपते भव।।'**

चन्दनाक्षतपुष्पादि से ब्रह्माजी की पूजा करें। अब यज्ञ केलिये अन्य आवश्यक ऋत्विजों का वरण करें।

**5.30-3 अथ ऋत्विग्वरणं :-**

एकाग्नि विधि से केवल आचार्य व ब्रह्मा के वरण से कर्म को कर सकते हैं। यदि सामर्थ्य है और आवश्यकता भी हो तो सामर्थ्य व आवश्यकता के अनुसार (23,15 अथवा 11) जितने ब्राह्मणों को वरण करना है उन्हें उत्तराभिमुख बिठाकर उनके समक्ष हाथ में गन्ध ाक्षतपुष्पताम्बूलमुद्रा और वस्त्र लिये हुये उनसे निवेदन करें -

**'अस्मिन्दुर्गापूजनादिहोमपर्यन्तकर्मकर्तु.....गोत्रवन्तं.....शर्माणं ब्राह्मणं एभिर्गन्धाक्षतपुष्पताम्बूलमुद्रावासोभिः ऋत्विक्त्वेन त्वामहं वृणे।'** वे सब कहें -

**'ॐ वृताः स्म। ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते'।**

अब सबके हाथों में दक्षिणा देकर प्रार्थना करें -

**'भगवन् सर्वधर्मा सर्वधर्मपरायण। वितते मम यज्ञेऽस्मिन्नृत्विक्त्वं मखे भव।।'**

चन्दनाक्षतपुष्पादि से ऋत्विजों की पूजा कर पुनः प्रार्थना करे -

**'अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः। ग्रहध्यानरताः नित्यं प्रसन्नमनसःसदा।।**
**अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः। ममाऽपि नियमा ह्येते भवन्तु भवतामपि।।**

**ऋत्विज्यथापूर्वं शक्रादीनां मखे भवेत्। यूयं तथा मे भवत ऋत्विजोऽर्हथ सत्तमाः।।**
**अस्मिन् कर्मणि ये विप्राः वृता गुरुमुखादयः। सावधानाः प्रकुर्वन्तु स्वं स्वं कर्म यथोदितम्।।**
**अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया। सुप्रसन्नैश्च कर्तव्यं कर्म मे विधिपूर्वकम्।।**
**यथाविहितं कर्म कुरु** (बहवश्चेत् - कुरुत)। विप्रः - **यथाज्ञानं करवाणि** (करवाम)।।'

## 5.31 अथ मधुपर्कपूजाप्रयोगः-

यजुर्वेदीय गृह्यसूत्र के अनुसार मधुपर्क से वरण किये गये समस्त ऋत्विजों की पूजा करने का क्रम बताया जा रहा है। (यदि वरण किये गये ब्राह्मण अलग-अलग वेदी हो तो उनकी मधुपर्क पूजा उस-उस वेद के गृह्यसूत्र के अनुसार ही करें)। समस्त ब्राह्मणों को एक पंक्ति में पूर्वाभिमुख बिठायें और स्वयं यजमान उत्तराभिमुख बैठें। यजमान आचमन कर हाथ जोड़कर प्रत्येक ब्राह्मण से प्रार्थना करें -

1. **'ॐ साधु भवानास्तामर्चयिष्यामो भवन्तम्'**, द्विज कहे - **'ॐ अर्चय'**।

2. आचार्य जितने ब्राह्मण वरण किये गये हैं उतने विष्टर ग्रहण कर कहे - **'ॐ विष्टरो विष्टरो विष्टरः'** और यजमान को दे, यजमान प्रत्येक से कहे - **'ॐ विष्टरः प्रतिगृह्यताम्'** और उन्हें दे, द्विज यजमान से ग्रहण कर कहे - **'ॐ विष्टरं प्रतिगृह्णामि'**। सभी के द्वारा ग्रहण किये जाने पर सभी द्विज मिलकर कहें और अपने-अपने आसन के नीचे विष्टर को उत्तराग्र रखे - **'ॐ वर्ष्मोऽस्मि समानामुद्यतामिव सूर्यः। इमं तमभितिष्ठामि यो मा कश्चाभिदासति।'**

3. आचार्य पाद्यपात्र ग्रहण कर कहे - **'ॐ पाद्यं पाद्यं पाद्यं'** और यजमान को दे, यजमान प्रत्येक से कहे - **'ॐ पाद्यं प्रतिगृह्यताम्'**, द्विज कहे - **'ॐ पाद्यं प्रतिगृह्णामि'**। अब यजमान प्रत्येक द्विज के पहले दाहिने पैर को फिर बायें पैर को क्रमशः इस मन्त्र से धोवे -

'**ॐ विराजो दोहोसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः।**' पुनः आचार्य पूर्ववत् विष्टर ग्रहण कर कहे – '**ॐ विष्टरो विष्टरो विष्टरः**' और यजमान को दे, यजमान प्रत्येक से कहे – '**ॐ विष्टरः प्रतिगृह्यताम्**' और उन्हें दे, द्विज यजमान से ग्रहण कर कहे – '**ॐ विष्टरं प्रतिगृह्णामि**'। सभी के द्वारा ग्रहण किये जाने पर सभी द्विज मिलकर कहें और अपने-अपने पैर के नीचे विष्टर को उत्तराग्र रखे – '**ॐ वर्ष्मोऽस्मि समानामुद्यतामिव सूर्यः। इमं तमभितिष्ठामि यो मा कश्चाभिदासति।**'

4. आचार्य अर्घ्यपात्र ग्रहण कर कहे – '**ॐ अर्घोऽर्घोऽर्घः**', और यजमान को दे, यजमान प्रत्येक से कहे – '**ॐ अर्घः प्रतिगृह्यताम्**', द्विज कहे – '**ॐ अर्घं प्रतिगृह्णामि**'। यजमान के हाथ से प्रत्येक द्विज अर्घ्यपात्र को इस मंत्र से ग्रहण करें – '**ॐ आपस्थ युष्माभिः सर्वान्कामानवाप्नुवानि।**' सभी के द्वारा ग्रहण किये जाने पर सभी द्विज मिलकर कहें और जल को भूमि पर गिरायें – '**ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टास्माकं वीरामापरासेचिमत्पयः।**'

5. आचार्य आचमनीयपात्र ग्रहण कर कहे – '**ॐ अचमनीयमाचमनीयमाचमनीयम्**', और यजमान को दे, यजमान प्रत्येक से कहे – '**ॐ आचमनीयं प्रतिगृह्यताम्**', द्विज कहे – '**ॐ आचमनीयं प्रतिगृह्णामि**'। यजमान के हाथ से प्रत्येक द्विज आचमनीयपात्र को ग्रहण कर इस मंत्र से एक बार आचमन करे – '**ॐ आमागन्यशसा सꣳसृज वर्चसा तम्मा कुरु प्रियम्प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्।**' फिर स्मार्त आचमन करें।

6. आचार्य ढके हुये मधुपर्कपात्र को ग्रहण कर कहे – '**ॐ मधुपर्क मधुपर्क मधुपर्कम्**', और यजमान को दे, यजमान प्रत्येक से कहे – '**ॐ मधुपर्क प्रतिगृह्यताम्**', द्विज कहे – '**ॐ मधुपर्क प्रतिगृह्णामि**'। यजमान के हाथ में स्थित मधुपर्कपात्र को खोलकर इस मंत्र से देखें – '**ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे।**' और इस मंत्र से यजमान के हाथ से ले – '**ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनो**

**बाहुभ्याम्पूष्णो हस्ताभ्यां प्रतिगृह्णामि।'** अपने बायें हाथ में रखकर दाहिने हाथ की अनामिका और अंगुष्ठ से प्रदक्षिणा के क्रम से एक बार आलोडन कर थोड़ा जमीन पर गिरायें फिर दोबारा मन्त्र का पाठकर पुनः थोड़ा जमीन पर गिराये – **'ॐ नमः स्यावास्यायान्यशनेयत्त आविद्धं तत्ते निष्कृन्तामि।'** तत्पश्चात् इस मंत्र से तीन बार अनामिका और अंगुष्ठ से प्राशन करके शेष को बांटें – **'ॐ यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि।'** तदनन्तर स्मार्तविधि से आचमन कर निम्न विधि से अपने अंगों को कराग्र से स्पर्श करें –

**'ॐ वाङ्मे आस्येऽअस्तु** (मुख)', **'ॐ नसो मे प्राणोऽअस्तु** (दोनों नासिका छिद्र)', **'ॐ अक्ष्णोर्मेचक्षुरस्तु** (दोनों आंख)', **'ॐ कर्णयोर्मे श्रोत्रमस्तु** (दोनों कान)', **'ॐ बाह्वोर्मे बलमस्तु** (दोनो बाहु)', **'ॐ ऊर्वोर्मे ओजोऽअस्तु** (दोनों जांघ)', **'ॐ अरिष्टानि मेऽअंगानि तनूस्तन्वा मे सह सन्तु** (पूरे शरीर को दोनों हाथों से स्पर्श करे)। हस्तप्रक्षालन कर आचमन करे।

7. आचार्य कहे – **'ॐ गौर्गौर्गौः'**, यजमान कहे – **'ॐ गौः प्रतिगृह्यताम्'**, द्विज कहे – **'ॐ गौः प्रतिगृह्णामि,**
**ॐ माता रुद्राणां दुहिता वसूनांꣳस्वसाऽआदित्यानाममृतस्य नाभिः। प्रणुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ठ।। मम अमुष्य यजमानस्य चोभयोः पाप्मा हतः ॐ'**। पुनः जोर से कहे – **'ॐ उत्सृजत तृणान्यत्तु।'**

**अथ प्रार्थना** :-

अब यजमान सभी ब्राह्मणों के समक्ष हाथ जोड़कर प्रार्थना करे –

**'ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः। वेदानां चैव दातारस्त्रातारः सर्वदेहिनाम्।1।**
**जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः। देवानां च पितॄणां च तृप्त्यर्थं याजकाः स्मृताः।2।**

येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम्। रक्षन्तु सततं तेषां जपयज्ञं व्यवस्थिताः।3।
ब्राह्मणा जंगमं तीर्थं त्रिषु लोकेषु विश्रुतम्। येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः।4।
पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः। सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः।5।
श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा। यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः।6।
अंगीकुर्वन्तु कर्मैतत्कल्पद्रुमसमाशिषः। यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः।7।
यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः। अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः।8।
देवध्यानरता नित्यं प्रसन्नमनसः सदा। अदुष्टभाषणा नित्यं मा सन्तु परनिन्दकाः।9।
ममापि नियमा ह्येते भवन्तु भवतामपि।10।'

(आचार्यजी से विशेष प्रार्थना –)

'संसारभयभीतेन अयं यज्ञः सुभक्तितः। प्रारब्धस्त्वत्प्रसादेन निर्विघ्नं मे भवत्विति।11।
मन्त्रमूर्तिर्भवान्नाथ संसारोच्छेदकारक। सांगं कर्म यथा मे स्यात्तथा कुरु हि भूसुर।12।
अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया। सुप्रसादेन कर्तव्यं शान्तिकं विधिपूर्वकम्।13।

।। अथ मधुपर्कांग गोदानम्।।

ॐ कृतस्य मधुपर्कादिपूजनकर्मणः सांगतासिद्ध्यर्थं गोनिष्क्रयभूतं द्रव्यं, रजतं चन्द्रदैवतं .....गोत्राय ....शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

*आचार्यं पृथक्प्रार्थयेत् -*

**मन्त्रमूर्तिभवान्नाथ संसारोच्छेदकारक। सांगं कर्म यथा में स्यात्तथा कुरु हि भूसुर ।। 11 ।।**
**संसारभयभीतेन अयं यज्ञः सुभक्तितः। प्रारब्धः त्वत्प्रसादेन निर्विघ्नं कुरु सुव्रत ।। 12 ।।**

## 6. अथ मण्डपान्तर्वर्तिकर्म

### 6.1 अथ मण्डप प्रवेशः ।।

पूजास्थानस्य चतुर्दिक्षु अश्वत्थोदुम्बरप्लक्षाणामन्यतमस्य वितस्तिमात्रान्दशकीलान् " **ॐ नमः सुदर्शनाय अस्त्राय फट्** " इति मंत्रेणाष्टोत्तरशताभिमन्त्रितान्

**'ॐ ये चात्र विघ्नकर्तारो भुवि दिव्यन्तरिक्षगाः। विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु।।1।।**
**मयैतत्कीलितं क्षेत्रं परित्यज्य विदूरतः। अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे।।2।।'**

इति मन्त्रद्वयेन निखनेत्। "**ॐ भूर्भुवःस्वः सुदर्शनायास्त्राय फट्**" इति मन्त्रेण प्रत्येकमस्त्रं संपूज्य तत्रैव पूर्वादिक्रमेण पंचोपचारैः संपूजयेत्। इतना कार्य करने के पश्चात् यजमान मण्डप में प्रवेश करे । ततः सम्भारान् गृहीत्वा सुवासिनी ब्राह्मणान् अग्रतः कृत्वा सतूर्यघोषः सपरिकरः पञ्चपूर्णकुम्भो गणपति वरुण मातृकापीठं वसोर्द्धारापीठं च ब्राह्मणानां हस्ते, यजमानः स्वहस्ते गणपतिं गृहीत्वा

**'ॐ भद्रंकर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षिभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ।।'**

इति मन्त्रेण महामण्डपं प्रदक्षिणीकृत्य मण्डपस्य पश्चिमद्वारमागत्य पाणिभ्यां चार्घपात्रमादाय शान्ति अध्यायं पठेत् ।

**'ॐ ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये सामप्राणम्प्रपद्ये चक्षुःश्रोत्रम्प्रपद्ये। वागोजः सहौजो मयि प्राणापानौ।।1।।**

यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वाति तृणम्बृहस्पतिर्मे तद्दधातु। शन्नो भवतु भुवनस्य यस्पतिः।।2।।

ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।3।।

कया नश्चित्रऽआभुवदूती सदावृधः सखा। कया शचिष्ठयावृता।।4।।

कस्त्वा सत्यो मदानाम्मꣳहिष्ठोमत्सदन्धसः। दृढा चिदारुजेवसु।।5।।

अभीषुणः सखीनामविता जरितृणाम्। शतम्भवास्यूतिभिः।।6।।

कया त्वन्नऽऊत्याभिप्रमन्दसे वृषन्। कया स्तोतृभ्यऽआभर।।7।।

इन्द्रो विश्वस्य राजति। शन्नोऽअस्तु द्विपदे शं चतुष्पदे।।8।।

शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा। शन्नऽइन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः।।९।।

शन्नो वातः पवताꣳशन्नस्तपतु सूर्यः। शन्नः कनिक्रन्दद्देवः पर्जन्योऽअभिवर्षतु।।10।।

अहानि शम्भवन्तु नः शꣳरात्रीः प्रतिधीयताम्। शन्नऽइन्द्राग्नी भवतामवोभिः शन्नऽइन्द्रा –
वरुणारातहव्या। शन्नऽइन्द्रापूषणावाजसा तौ शमिन्द्रासोमासुविताय शंयोः।।11।।

शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः।।12।।

स्योना पृथिवि नो भवानृक्षरानिवेशनी। यच्छानः शर्म सप्रथाः।।13।।

आपो हिष्ठामयो भुवस्तानऽऊर्जे दधातन। महेरणाय चक्षसे।।14।।

यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः।।15।।

तस्माऽअरंगमामवो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः।।16।।

द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि।।17।।
दृतेदृꣳहमा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा
सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे।।18।।
दृतेदृꣳहमा। ज्योक्तेसन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम्।।19।।
नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे। अन्यांस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳशिवो भव।।20।।
नमस्तेऽअस्तु विद्युते नमस्ते स्तनयित्नवे। नमस्ते भगवन्नस्तु यतः स्वः समीहसे।।21।।
यतो यतः समीहसे ततो नोऽअभयं कुरु। शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः।।22।।
सुमित्रियानऽआपऽओशधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽअस्मान्द्वेष्टि यंच वयं द्विष्मः।।23।।
तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम
शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्।।24।। ॐ शान्तिः शान्तिः शान्तिः।।'

ततः पृथिवीं ध्यात्वा-

'चतुर्भुजां पृथ्वीं शुक्लां कूर्मपृष्ठोपरि स्थिताम्। शंखचक्रशूलकरां सुप्रसन्नां विहसिताम्।।
सवत्सां गोरूपधरां पद्मकरां वसुन्धराम्।।' अथ आवाहनम् -
आगच्छ देवि कल्याणि वसुधे लोकधारिणि। पृथ्वी त्वं ब्रह्मदत्तासि काश्यपेनाऽभिवन्दिता।।'

अथ पुष्पादिना पूजयेत् -

**ॐ स्योना पृथिवि नो भवानृक्षरानिवेशनी । यच्छानः शर्म सप्रथाः ।**

इति मन्त्रेण पुष्पादिना संपूज्य अष्टार्घ्यं दद्यात् ।

**ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्त्रवन्तु नः ।**

इति मन्त्रेण अर्घ्यं दत्वा प्रार्थयेत् -

**'उधृतासि वराहेण विष्णुना शतबाहुना । दंष्ट्राग्रे लीलया देवी यज्ञार्थे त्वां वृणोम्यहम् ।।**
**ब्रह्मणा निर्मिते देवि विष्णुना शंकरेण च । पार्वत्या चैव गायत्र्या स्कन्देन श्रवणेन च ।।**
**यमेन पूजिता देवि धर्मवृद्धिजिगीषया । सौभाग्यं पुत्रांश्च दत्ते धनं रूपं च पूजिता ।।'** इति प्रार्थना ।।

ततो मण्डप पश्चिमद्वारेण प्रथमं दक्षिणपादं दत्त्वा प्रविशेत ।।

## 6.2 भूतोत्सादनम्

**करकलित कपालः कुण्डली दण्डपाणिस्तरुणतिमिरनीलो व्याल यज्ञोपवीती ।**
**क्रतुसमयसपर्या विघ्नविच्छेद हेतुर्जयति वटुकनाथः सिद्धिदः साधकानाम् ।।**

अब रक्षोघ्न सूक्त से भूतोत्सादन करें - (ततः आचार्यो वामहस्ते गौरसर्षपांल्लाजामिश्रितान् गृहीत्वा दिग्रक्षणं कुर्यात् तत्र मन्त्राः )

**ॐ अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामदऽआदित्यश्च द्यौश्च सन्नते ते मे सन्नमतामदऽआपश्च वरुणश्च सन्नते ते मे सन्नमतामदः।**

सप्तसथ्ठसदोऽअष्टमीभूतसाधनी। सकामाँ2ऽअद्वनस्वकुरुसंज्ञानमस्तुमेमुना ।।
ॐ यथेमां वाचङ्कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याथ्ठशूद्राय चार्य्याय च स्वाय चारणाय च। प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्धयतामुपमादो नमतु ।।
ॐ बृहस्पते ऽअति यदर्यो ऽअर्हाद् द्युमद्विभाति क्रतुमज्जनेषु । यदियच्छवसऽऋत प्रजात तदस्म्मासु द्रविणन्धेहि चित्रम् । उपयाम गृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा ।।
ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मे निष्टयो यममात्त्यो निचखानेदमहन्तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्त्याङ्किरोमि ।।
ॐ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्त्रक्षोहणो वो वलगहनो वनयामि वैष्णवान्त्रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणो वां वलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवास्थ ।।
ॐ रक्षसाम्भागोसि निरस्तथ्ठरक्षऽइदमहथ्ठरक्षोभि तिष्ठामीदमहकारक्षोवबाधऽ इदमहथ्ठरक्षोधमन्तमो नयामि। घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वेस्तोकानामग्नि राज्यस्य वेतु स्वाहा स्वाहाकृतेऽऊद्र्द्धनभसमारुतङ्गच्छतम् ।।
ॐ अग्ने नय सुपथा रायेऽ अस्मान्विश्श्वानि देव वयुनानि विद्वान् ।
युयोद्ध्यस्म्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्ति विधेम ।।
ॐ रक्षोहा विश्श्वचर्षणिरभियोनिमयोहते । द्रोणेसधस्थमासदत् ।।
अपसर्पन्तु ते भूता ये भूता भूमि संस्थिताः । ये भूताः विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।

**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन ब्रह्मकर्म समारभे ।।**
**यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ।।**
**भूतप्रेतपिशाचाद्याः अपक्रामन्तु राक्षसाः । स्थानादस्माद्व्रजन्त्वन्यत् स्वीकरोमि भुवं त्विमाम् ।।**
**भूतानि राक्षसा वापि अत्र तिष्ठन्ति केचन । ते सर्वेऽप्यपगच्छन्तु शान्तिकं तु करोम्यहम् ।।**

एतैः मन्त्रैः ईशानादि सर्वदिक्षु विदिक्षु ऊर्ध्वाधः सर्षपान् विकीर्य
'**देवा आयान्तु यातुधाना अपयान्तु, देवीयाग देवयजनं रक्षस्व ।।**' इति रक्षां कृत्वा

### 6.3 अथ पंचगव्यकरणम् प्रोक्षणं च

1. गोमूत्रम् - **ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ।**
2. गोमयम् - **ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।**
3. क्षीरम् - **ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ।।**
4. दधि - **ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभिनो मुखाकरत्प्रण आयूꣳषि तारिषत् ।।**
5. आज्यम् - **ॐ तेजोसि शुक्रमस्यमृतमसि धामनामसि प्रियन्देवानामनाधृष्टं देवयजनमसि ।।**
6. कुशोदकम् - **ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।।**

इति प्रणवेनालोड्य वारुणैः मन्त्रैः कर्मभूमिं प्रोक्षयेत् ।।

**ॐ आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन । महरेणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते ह नः।**

**उशतीरिव मातरः । तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।**

ततः चतुर्भिः मन्त्रैः कर्मभूमिं प्रोक्षेत् ।।

**अग्निं या गर्भं दधिरे विरुपास्तान आपः शं स्योना भवन्तु ।। 1 ।।**
**ॐ यासां राजा वरुणो याति मध्ये सत्यानृत अवपश्यं जनानाम् ।**

**मधुश्चुतः शुचयो याः पावकास्तान आपः शꣳस्योना भवन्तु ।। 2 ।।**
**ॐ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।**

**याः पृथिवीं पयसोदंति शुक्रास्तान आपः शꣳस्योना भवन्तु ।। 3 ।।**
**ॐ शिवेन मा चक्षुषा पश्यतापः शिवया तनु वोपस्पृशत त्त्वचं मे ।**
**सर्वा ꣳअग्नी ꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त ।। 4 ।।**

## 6.4 वास्तुकीलनम्

चारों दिशाओं में पीपल/गूलर/पलाश के एक बित्ता (12 अंगुल) लम्बे 10 कीलों को '**ॐ नमः सुदर्शनायास्त्राय फट्**' इस मन्त्र के 108 बार जपके द्वारा अभिमन्त्रित कर निम्न मन्त्रों का आवृत्ति पूर्वक पाठ करते हुये बांध दें।

**'ॐ ये चात्र विघ्नकर्तारो भुवि दिव्यन्तरिक्षगाः। विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु।1।**
**मयैतत्कीलितं क्षेत्रं परित्यज्य विदूरतः। अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे।2।**

पुनः '**ॐ नमः सुदर्शनायास्त्राय फट्**' मन्त्र से प्रत्येक कील का पंचोपचार पूजन करके उनमें इन्द्र आदि लोकपालों का आवाहन कर पंचोपचार पूजन करें। गृह रक्षार्थ मौलीसूत्र अथवा मूंज आदि से निर्मित रस्सी से पूरे भवन को प्रदक्षिणा के क्रम से बांधें।

## 6.5 वास्तुपूजनम्

**ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवो भवानः । यत्त्वेमहे प्रतितन्नौ जुषस्व शन्नौ भव द्विपदे शं चतुष्पदे ।। ॐ भूर्भुवःस्वः गृहवास्तुपुरुषाय नमः। ॐ भूर्भुवःस्वः वास्तुपुरुषमावाहयामि स्थापयामि । ॐ भूर्भुवःस्वः भो वास्तुपुरुष इहागच्छ इह तिष्ठ ।।**

**ॐ नमो भगवते वास्तुपुरुषाय महाबल पराक्रमाय सर्वाधिवासाश्रितशरीराय ब्रह्मपुत्राय सकलब्रह्माण्डधारिणे भूभारार्पित मस्तकाय पुरपत्तनप्रासादगृहवापिसरकूपादेः सन्निवेशसान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वम्भराय परमपुरुषाय शक्रवरदाय वास्तोष्पते नमस्ते । ॐ भूर्भुवःस्वः वास्तोष्पतये नमः, वास्तोष्पतिमावाहयामि स्थापयामि ।। भो वास्तोष्पते इहागच्छ इह तिष्ठ ।।**

अब यजुर्वेदीय पद्धति से चित्र संख्या 15 क पृष्ठ संख्या 350 में दर्शाये गये मण्डल को पीठ पर निर्माण करके रंग भरकर चित्र संख्या 15 ख पृष्ठ संख्या 350 में दर्शाये गये क्रम से आवाहनादि करें। इस 64 पद वास्तुमण्डल में वास्तुपुरुष की कल्पना करते हुये ईशानकोणस्थ पद के दक्षिणार्ध आदि में प्रदक्षिणा के क्रम से सिर आदि अंगों की कल्पना कर तत्तदंगों में स्थित तत्तद् कोष्टों में शिखी आदि देवताओं का आवाहन करें, क्योंकि कहा है कारिका में – 'ब्रह्माणमादितः कृत्वा शिखिनं वा क्रमेण तु।' अर्थात् ब्रह्मा से अथवा शिखी से आरम्भ कर वास्तुदेवताओं की स्थापना करनी चाहिये। यहाँ हम शिखी से आरम्भ कर स्थापना क्रम को दर्शा रहे हैं।

1. ईशानकोणस्थ पद के दक्षिणार्ध में वास्तुपुरुष के सिर की भावना कर उसमें शिखी देवता का आवाहन करें

**'ॐ नमः शम्भवाय च मयोभवाय च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च।1।**

**तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमसे हूमहे वयम्। पूषानो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये।2।**

**शिखी कर्पूरधवलस्त्रिनेत्रो वृषवाहनः। वरत्रिशूलहस्तश्च वास्तोः शिरसि संस्थितः।3।**

**ॐ भूर्भुवःस्वः शिखिने नमः। शिखिनमावाहयामि स्थापयामि। भो शिखिन् इह आगच्छ इह तिष्ठ।'**

2. उसके दक्षिण में स्थित ड़ेढ़ पद में वास्तुपुरुष के दाहिने आंख की भावना कर उसमें पर्जन्य देवता का आवाहन करें –

**'ॐ शन्नो वातः पवताꣳशन्नस्तपतु सूर्यः। शन्नः कनिक्रदद्देवः पर्जन्योऽअभिवर्षतु।1।**

**महाँ2ऽइन्द्रो यऽ ओजसा पर्जन्यो वृष्टिमाँ2इव। स्तोमैर्वावृधे। उपयाम गृहीतोऽअसि महेन्द्राय त्वैषते योनिर्महेन्द्राय त्वा।2।**

**घनस्तडित्वान्पर्जन्यो नानावर्णपरिप्लुतः। ज्योतिर्धूमश्च वातात्मा वास्तोर्दक्ष दिशि स्थितः।3।**

**ॐ भूर्भुवःस्वः पर्जन्याय नमः। पर्जन्यमावाहयामि स्थापयामि। भो पर्जन्य इह आगच्छ इह तिष्ठ।**

3. उसके दक्षिण में स्थित दो पद में वास्तुपुरुष के दाहिने कान की भावना कर उसमें जयन्त देवता का आवाहन करें –

**'ॐ मर्माणि ते वर्मणाच्छादयामि सोमस्त्वाराजा मृतेनानुवस्ताम्। उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवामदन्तु।1।**

**उद्युत्यशतवेदसन्देवं वहन्तिकेतवः। दृशे विश्वाय सूर्यम्।2।**

**जटिलः श्मश्रुलः शीतः कमण्डल्वक्षसूत्रधृक्। जयन्तोऽब्जासनो गौरो वास्तोर्दक्षे ह्यवस्थितः ।3।**

**ॐ भूर्भुवःस्वः जयन्ताय नमः। जयन्तमावाहयामि स्थापयामि। भो जयन्त इह आगच्छ इह तिष्ठ। '**

4. उसके दक्षिण में स्थित दो पद में वास्तुपुरुष के दाहिने अंस (दाहिनी गर्दन) की भावना कर उसमें कुलिशायुध देवता का आवाहन करें –

**'ॐ आयान्त्विन्द्रो वसऽ उपनऽइह स्तुतः सधमादस्तु शूरः। वावृधानस्तविषीर्यस्य पूर्वी द्यौर्नक्षत्रिमभिभूति पुष्यात्।1।**

**इन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः। देवसेनानामभि भञ्जतीनाम्जयन्तीनाम्मरुतो यन्त्वग्रम्।2।**

**इन्द्र ऐरावता रूढः पीतो दैत्यविमर्दनः। कुलिशाख्यकरो वास्तोर्दक्षिणांसे समाश्रितः।3।**

**ॐ भूर्भुवःस्वः इन्द्राय नमः। इन्द्रमावाहयामि स्थापयामि। भो इन्द्र इह आगच्छ इह तिष्ठ।'**

5. उसके दक्षिण में स्थित दो पद में वास्तुपुरुष के दाहिने बाहु (कन्धा) की भावना कर उसमें सूर्य देवता का आवाहन करें –

**'ॐ बणमहाँ2ऽअसि सूर्य बडादित्यमहाँ2ऽअसि। महस्ते सतो महिमापनस्यतेद्धा देवमहाँ2ऽअसि।1।**

**सूर्य रश्मिर्हरिकेशः पुरस्ताज्ज्योतिरुदयाँ2ऽअजस्रम्। तस्य पूषा प्रसवे याति विद्वान्सम्पश्यन्विश्वा भुवनानि गोपाः।2।**

**सूर्यो रक्तो ग्रहाध्यक्षो घृताङ्गो द्विभुजः प्रभुः। सप्ताश्वरथगो वास्तोर्दक्षबाहुसमाश्रितः।3।**

**ॐ भूर्भुवःस्वः सूर्याय नमः। सूर्यमावाहयामि स्थापयामि। भो सूर्य इह आगच्छ इह तिष्ठ।'**

6. उसके दक्षिण में स्थित दो पद में वास्तुपुरुष के पुनः दाहिने बाहु की भावना कर उसमें सत्य देवता का आवाहन करें –

**'ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते।1।**

**सत्यो भूतहितो धर्मो वरदोऽभयपाणिकः। प्रसन्नाब्जासनो ऽब्जाभो दक्षदोरूपमूलगः।2।**

**ॐ भूर्भुवःस्वः सत्याय नमः। सत्यमावाहयामि स्थापयामि। भो सत्य इह आगच्छ इह तिष्ठ।'**

7. उसके दक्षिण में स्थित ड़ेढ़ पद में वास्तुपुरुष के दाहिने कूर्पर (ऊपरी कुहनी) की भावना कर उसमें भृश देवता का आवाहन करें – **'ॐ**

**आत्वाहार्षमन्तरभूर्ध्रु वस्तिष्ठा विचाचलिः। विशस्त्वा सर्वावाञ्छन्तु मात्वद्राष्ट्रमधि भृशत्।1। भायै दार्वाहारम्प्रभायाऽ अग्न्येधम्ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारन्देव लोकाय पेशितारम्मनुष्यलोकाय प्रकरितारꣳसर्वेभ्यो लोकेभ्यऽउपसेक्तारमवऽऋत्यै वधायोपमन्थितारमेधाय वासः पल्पूलिम्प्रकामाय रजयित्रीम्।2।**

**भृशः पुष्पमानस्थः पुष्पेज्येक्षुधनुःकरः। गौरो नादरतः कामी दक्षकूर्पर संस्थितः।3।**

**ॐ भूर्भुवःस्वः भृशाय नमः। भृशमावाहयामि स्थापयामि। भो भृश इह आगच्छ इह तिष्ठ।'**

8. उसके दक्षिणाग्नेय में स्थित पद के आधे भाग में वास्तुपुरुष के दाहिने प्रबाहु (कुहनी के जोड़)की भावना कर उसमें आकाश देवता का आवाहन करें –

**'ॐ यावां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञम्मिमिक्षितम्। उपयाम गृहीतोस्यश्विभ्यां त्वैषतेयाकनिर्माध्वीभ्यान्त्वा।1। हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽ ऋतम्बृहत्।2।**

**शंखचक्रधरो नित्यमसितः स्वस्तिकासनः। सशब्दः सर्वगन्तव्यो कूर्पराधः समाश्रितः।3।**

**ॐ भूर्भुवःस्वः आकाशय नमः। आकाशमावाहयामि स्थापयामि। भो आकाश इह आगच्छ इह तिष्ठ।'**

9. उसके पश्चिम में स्थित आधे पद में वास्तुपुरुष के पुनः दाहिने प्रबाहु (निचली कुहनी) की भावना कर उसमें वायु देवता का आवाहन करें –

**'ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि। नियुत्वान्त्सोमपीतये।1। अप्स्वग्ने सधिष्टवसौषधीरनुरुद्ध्यसे। गर्भे सञ्जायसे पुनः।2। वायुधूम्रो मृगारूढो जगत्प्राणश्चलो युवा। ध्वजांकुशे च बिभ्राणो दक्षबाहुसमाश्रितः।3।**

**ॐ भूर्भुवःस्वः वायवे नमः। वायुमावाहयामि स्थापयामि। भो वायो इह आगच्छ इह तिष्ठ।'**

**10.** उसके पश्चिम में स्थित ड़ेढ़ पद में वास्तुपुरुष के दाहिने मणिबन्ध की भावना कर उसमें पूषा देवता का आवाहन करें – **'ॐ पूषन्तवव्रते वयन्नरिष्येम कदाचन। स्तोतारस्तऽइहस्मसि।1। पूषा पंचाक्षरेण पंचदिशऽउदजयत्ताऽ उज्जेषᳯसविता षडक्षरेण षड्तूनुदजयत्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रामुदजयत्तामुज्जेषम्।2। महास्वनः शोणवर्णो द्विभुजोऽब्जकमण्डलुः। पूषा गजासनो दक्षमणिबन्धसमाश्रितः।3। ॐ भूर्भुवःस्वः पूष्णे नमः। पूषणमावाहयामि स्थापयामि। भो पूषन्निह आगच्छ इह तिष्ठ।'**

**11.** उसके पश्चिम में स्थित दो पद में वास्तुपुरुष के दाहिने पार्श्व (ऊपरी बगल) की भावना कर उसमें वितथ देवता का आवाहन करें – **'ॐ तत्सूर्यस्य देवत्वन्तन्महित्वम्मद्ध्या कर्त्तोर्विततᳯसंजभार। यदेदयुक्तहरितः सधस्थाद्रात्री वासस्तनुते सिमस्मै।1। सविता प्रथमेऽअहन्नग्निर्द्वितीये वासुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमाः पंचमऽऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे मित्रो नवमे वरुणो दशमऽ इन्द्रऽएकादशे विश्वेदेवा द्वादशे।2। वितथश्चेन्द्रचापाभो कुबेरप्रतिमासमः। मलवासाऽलसो रिक्तकरो दक्षिण पार्श्वगः।3। ॐ भूर्भुवःस्वः वितथाय नमः। वितथमावाहयामि स्थापयामि। भो (** निर्ऋतये नमः। निर्ऋतिमावाहयामि स्थापयामि। भो निर्ऋते) **वितथ इह आगच्छ इह तिष्ठ।'**

**12.** उसके पश्चिम में स्थित दो पद में वास्तुपुरुष के दाहिने पार्श्व (निचली बगल) की भावना कर उसमें गृहक्षत देवता का आवाहन करें – **'ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत। अस्तोषतस्व भानवो विप्रानविष्ठयामतीयोजान्विन्दते हरी ।1। गृहा मा बिभीत मावेपद्ध्वमूर्जम्बिभ्रतऽएमसि। ऊर्जम्बिभ्रद्ध्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ।2। गृहरक्षकरक्तांगो गदासिवरचर्मभृत्। पंचास्यवाहनः क्रूरो वास्तोर्दक्षकटिस्थितः।3। ॐ भूर्भुवःस्वः गृहक्षताय नमः। गृहक्षतमावाहयामि स्थापयामि। भो गृहक्षत इह आगच्छ इह तिष्ठ।'**

